वयं येषां प्रसादेन शास्त्रार्थे परिनिष्ठताः।। 3 ।।

सहजसरलां प्रेम्णा दीर्घां समस्तविशोधिनीं

सकृदपि कृपादृष्टिं सन्तो दिशन्तु भवद्विधाः।

कथमपि सती पूता सद्यस्तया विषयीकृता

मम कृतिरियं हित्वा दोषान्भवत्वतिसद्गुणा।। 4 ।।

गुरूणां माहात्म्यान्निजविविधविद्यापरिचयात्

श्रुतेर्यन्मे सम्यङ्मननपरिनिष्पन्नमभवत्।

परब्रह्मानन्दस्फुरणमखिलानर्थशमनं

तदेतस्मिन् ग्रन्थे निखिलमतियत्नेन निहितम्।। 5 ।।

इह कुमतिरतत्त्वे तत्त्ववादी वराकः

प्रलपति यदकाण्डे खण्डनाभासमुच्चैः।

प्रतिवचनममुष्मै तस्य को वक्तुविद्वान्

न हि रुतमनुरौति ग्रामसिंहस्य सिंहः।। 6 ।।

कुतर्कगरलाकुलं भिषजितुं मनो दुर्धियां

मयायमुदितो मुदा विषविघातिमन्त्रो महान्।

अनेन सकलापदां विघटनेन यन्मेऽभवत् परं

सुकृतमर्पितं तदखिलेश्वरे श्रीपतौ।। 7 ।।

ग्रन्थस्यैतस्य यः कर्ता स्तूयतां वा स निन्द्यताम्।

मयि नास्त्येव कर्तृत्वमनन्यानुभवात्मनि।। 8 ।।

श्रीव्यासशङ्करसुरेश्वरपद्मपादान्

वेदान्तशास्त्रसुनिबन्धकृतस्थथान्यान्।

विद्याप्रदानिह यतिप्रवरान्दयालून् सर्वान्

गुरून् सततमेव नमामि भक्त्या।। 9 ।।

सिद्धीनामिष्टनैष्कर्म्यब्रह्मगानामियं चिरात्।

अद्वैतसिद्धिरधुना चतुर्थी समजायत।। 10 ।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वती श्रीचरणशिष्यश्रीमदुसूदनसरस्वतीविरचितायामद्वैतसिद्धौ मुक्तिनिरूपणं नाम चतुर्थः परिच्छेदः।।

[4-5]